# ॥ श्रीगुरु नानक देव चरितम् ॥

## ( महाकाव्यम् )



रचयिता — विष्णुदत्तशर्मा



श्रीविष्णुदत्तशर्मा

## कविवर श्री विष्णुदत्त शर्मा का संक्षिप्त परिचय

जन्म स्थान : मेरठ।

निवास संकेत : ११०, निकट थाना, धर्मपुरी, सदर, मेरठ।

जन्म तिथि : आश्विन कृष्णा ६ संवत् १९९३ वि०

शिक्षा : साहित्य-व्याकरण-दर्शन-ज्यौतिषाचार्य, एम.ए. (हिन्दी-संस्कृत), काव्यतीर्थ, एल.टी., साहित्यरत्न, प्रभाकर।

कृतियां/

स्वरचित : १. 'श्रीमतीन्दिरागान्धि-चरितामृतम्' काव्यम् (पुरस्कृत)

२. 'श्रीगुरुनानकदेवचरितम्' महाकाव्यम्

३. 'व्याकरणदर्शने मायास्वरूपविमर्शः' (प्रेस में)

४. संस्कृत-परिचयः, भाग १, २, ३

अनूदित : १. नीतिशतकम्।

२. अपरीक्षितकारकम्।

३. श्रीबुद्धचरितम् १ सर्गः।

व्यवसाय : अध्यापन

अध्यापन काल : १७ वर्ष से निरन्तर

अध्यापन संस्था : नानकचन्द ऐंग्लो संस्कृत स्नातकोत्तर महाविद्यालय, मेरठ।

# ॥ श्रीगुरुनानकदेवचरितम् ॥

## ( महाकाव्यम् )



रचयिता — विष्णुदत्तशर्मा
प्रवक्ता, संस्कृत-विभागे
मयराष्ट्रस्थ, नानकचन्द ऐंग्लो संस्कृत स्नातकोत्तर महाविद्यालयस्य

# समर्पणम्

महामहिम राष्ट्रपति
श्री ज्ञानि जैलसिंह महोदयस्य
करकमलेषु



ज्ञानं ज्ञाता ज्ञेयं ज्ञप्ति-र्ज्ञाप्यञ्च ज्ञापकं सर्वम् ।
नीतौ यस्य निविष्टं, सोऽयं राष्ट्राधिपो जयति ॥
जैनागम इव सदयः, स्त्रीपुंसेषु प्रकामतप्तेषु ।
लग्नो योगक्षेमे बिभर्त्ति राष्ट्रं समग्रं यः ॥
सिन्धोः सर्वगुणानां राष्ट्रपतिश्रीमहामहिम्नः स्यात् ।
हस्तसरोजे न्यस्तं भुवि प्रशस्तं गुरोः काव्यम् ॥

—विष्णुदत्तशर्मा

# आत्म-निवेदनम्

नरत्वं दुर्लभं लोके, विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र, शक्तिस्तत्र सुदुर्लभा ॥

श्लोकोऽयं सुप्रसिद्धः । एतादृशे कठिने काव्यवर्त्मनि केचिद् विरलाः कवय एव सुयात्रिणो वभूवुः । मादृशानामल्पधियां तस्मिन् पथि काव्ययात्रायां कथं प्रवृत्तिः स्यात् ? वाल्यकाल एकदा गृहेऽखण्डरामायणस्य पाठवाचनं सञ्जातम् । तदाऽहं 'श्री विल्वेश्वर संस्कृतमहाविद्यालये, मयराष्ट्रे (मेरठ नगरे) पूर्वमध्यमाकक्षाया-मध्ययनरत आसम् । पाठं श्रुत्वाऽग्रिमदिने मया हिन्दीभाषायां रामयणविषय-माश्रित्य कानिचित् पद्यानि विरचितानि । तानि श्रुत्वा गुरुपादा श्रीपं० प्रभुदत्त स्वामिनस्तान् संशोध्य मदीयोत्साहवर्धनमकुर्वन् । अहं प्रतिदिनं कानिचित् पद्यानि विलिख्य तेषां समक्षेऽनयम् । तैः प्रतिदिनं संशोधितानि पद्यानि । शास्त्रिकक्षायां गुरुपादैर्वृत्तरत्नाकरं पाठितमादिष्टञ्च—वत्स ! अद्यतस्त्वं संस्कृतभाषया श्लोकान् विरचय । गुरोराज्ञां शिरोधार्याहं प्रतिदिनं गुरोः समक्षं लिखितान् श्लोकाननयम् । ते च तेषां संशोधनं कृतवन्तः, प्रशंसाञ्च कृतवन्तः ।

कारणविशेषादाचार्यकक्षायामहं खुर्जास्थ श्रीराधाकृष्णसंस्कृतमहाविद्यालये-ऽध्ययनाय गतः । आचार्यकक्षायां कविरत्नानां साहित्य-शास्त्र-मर्मज्ञानां, गुरुपादानां श्रीब्रह्मानन्दशुक्लमहाभागानां सन्निधौ मया स्वरचिताः केचिच्छ्लोका दर्शिता-स्तैस्ते प्रशंसिताः । तैर्मदुत्साहः प्रवृद्धः । अनेकासु मासिकपत्रिकासु मदीयाः रचनाः प्रकाशितास्तत्प्रकाशनेनापि मदुत्साहवर्धनं द्विगुणतरं सञ्जातम् ।

अध्यापनकाले स्वकीये नगरे व्याकरण-साहित्य-दर्शनादि-विविधविषयाणां पारङ्गतानां, कविराजानां, श्री पं० प्रभुदत्तस्वामिनां गुरुचरणानां पुनः सान्निध्यं सम्प्राप्तं मया ।

तैरहं प्रेरितः काव्यरचनाविषये । प्रश्नः समुत्पन्नः ? कं विषयमवलम्ब्य काव्यरचनां कुर्याम् ? साम्प्रतं श्रीमत्या इन्दिरागान्धिमहाभागाया यशोभास्करेण जगन्नीतिविभया आलोकितम् । तया भारतस्य कीर्त्तिध्वजो विश्वदिक्षु सर्वत्र

स्थापितः । तामेवाश्रित्य मयैकं लघुकाव्यं १९८१ ख्रिस्ताब्दे प्रणीतम् । तच्च सर्वकारेण पुरस्कृतम् । एतद्विज्ञाय हृदये प्रबन्धकाव्यप्रणयने बुद्धिः सञ्जाता । किं नूत्नं वृत्तं मया गृहीतव्यम् । प्रश्नोऽयं पुनर्हृदये बुद्धौ च विचचार ।

प्रायः संस्कृतकाव्येषु सन्त इति लोके प्रसिद्धा सज्जनाः कवीनां लेखनीभिरस्पृष्टाः । सन्तश्च बहवो भारतस्य पवित्रधरातले आविर्भूताः । यैर्जनता समये समये स्ववाण्या प्रभाविता । परन्तेषु पूज्यपादानां श्रीगुरुनानकमहाभागानां स्थानं सर्वोपरि वर्त्तते । एते गुरुवरा साम्प्रदायिकविषवाष्पोद्घूषितप्रभावाद्बहिः सर्वदा व्यचरन् ।

यत एतेषामनुयायिनः शिष्याः (सिक्खाः) सर्वाधिकाः सन्ति । श्रीगुरुनानकानां शिष्या न केवलं हिन्दवः, अपितु मुस्लिमा, विदेशीयाः ईसाईप्रभृतयश्च वर्त्तन्ते । सर्वेषु देशेषु एषां शिष्यपरम्परा दरीदृश्यते । एषां महाभागानां शिष्या (सिक्खा) तादृशाः सुदृढाः, देशभक्त्यनुप्राणिता, बलवीरा, श्रद्धालवश्च सन्ति, न तादृशा अन्येषां केषाञ्चित् सद्वराणाम् । गुरुद्वाराख्यानि गुरुमन्दिराणि सर्वत्रैषां कीर्त्तिं कलयन्ति ।

अतो मया श्रीगुरुनानको लेखन्या विषयो निर्णीतः, अङ्गीकृतश्च । तस्यैव फलमिदं 'श्रीगुरुनानकदेवचरितम्' महाकाव्यम्, सहृदयपाठकानां, साहित्यनिष्णातानां, गुणदोषभावपरीक्षणे सक्षमाणां, काव्यमर्मज्ञानां, विदुषाम् अध्येतॄणाञ्च करकमलेषु सादरं समर्पितम् ।

'कीदृशमेतत्प्रबन्धकाव्यम्' एतद्विषये सुकवयः, समालोचका, विद्वांसः, सहृदयाः, पाठकाश्च प्रमाणम् । यद्येषा काव्यस्रक् सहृदयानां पाठकानां हृदयाभूषणं भवेत्, तदा मे श्रमः सार्थक इति मे हृदयाभिलाषः ।

दीपमालिका, कार्त्तिक-
कृष्णामावस्या
संवत् २०३९ वि०

विदुषां विधेयः
विष्णुदत्तशर्मा
प्रवक्ता, संस्कृत-विभागे, मयराष्ट्रस्थ-
नानकचन्द ऐंग्लो संस्कृत-स्नातकोत्तर
महाविद्याविद्यालयस्य ।

# प्रस्तावना

आसीत् पुरा वाल्मीकि-व्यास-कालिदासादिभिर्विश्वकविभिः प्रयुक्ता संस्कृत-भाषैव लोकभाषा। विश्वस्य बहुषु भागेषु, विशेषेण योरोपीयदेशेषु या भाषाः सम्प्रति व्यवह्रियन्ते, तासां मूलं संस्कृतभाषैवासीदिति भाषाशास्त्रविदां निर्विवादो निष्कर्षः। भारतीयानान्तु भाषाणां प्रायेण सर्वासां संस्कृतभाषैव जननीति तदपभ्रंशानां स्वरूपपर्यालोचनेन तन्मूलानुसन्धानेन च सिद्धम्। अपभ्रंशस्य प्रकृतिर्हि स्वयमेतत् प्रमाणयति—आसीत् पुरा किञ्चित् संस्कृतं शब्दस्वरूपं यस्यायम् अपभ्रंश इति। तथाहि,—गावी, गोणी, गोतादिष्वपभ्रंशेषु येयं गोसमानाकारा शब्दश्रुतिः सा गोशब्दं स्फुटमात्मनो मूलं प्रत्याययति। तेन भारतीयभाषासु व्यवह्रियमाणाः प्रतिशतमशीतिप्रायाः शब्दाः संस्कृतस्यैवापभ्रंशभूता इति तेषां समश्रुत्या प्रमाण्यते। योरोपीयभाषाणामपीयमेव स्थितिः। पितर्, मातर्, दुहितर् प्रभृतयः संस्कृतशब्दा एव फादर्, मदर्, डोटर् इति, पिदर, मादर्, दुख्तर् इति च योरोपीय-पारसीय-शब्दविकृतीनां प्रकृतय इति सुस्पष्टं समानश्रुत्यनुरोधात्। अस्ति खलु पुरा बहवोप्यनार्याचरणा बलादार्यैरार्यावर्त्तादवरोपिताः पाश्चात्येषु भूभागेषु न्यवसन्नितीहासविदामूहः। आर्यावर्त्तादवरोपितास्ते तत्कृतनिजावरोपस्मृति-संरक्षणार्थं चिराय किलार्यावरोपसंज्ञाम् आत्मनः सञ्जगृहुः। स च पुनरार्यावरोपशब्द एव लोपागमविकारविधया स्वीयमाद्यावयवं परिहाय कालान्तरे यावरोप इति, स च यावरोपोऽपि वर्णविकृत्या 'योरोप' इत्याकृतिमभजतेत्यस्माकमूहः।

व्याकरणस्य कर्त्रा शालातुरीयेण मुनिना स्वोपज्ञायाम् अष्टाध्याय्यां भाषायां छन्दसीति चोभयथा विभज्य प्रणीतेषु सूत्रेषु प्रयुक्तो भाषेतिशब्दोऽपि संस्कृतस्य लोकभाषात्वे साधकम्। पाणिनेश्च शालातुरीयेतिव्यपदेशोऽपि भारताद् बहिर्भूभागेषु संस्कृतस्य व्यापकं प्रचारं प्रसारञ्च सुतरां प्रमाणयति। पाणिनिशिक्षायां 'संस्कृते प्राकृते चापि···' इति प्राकृतात् प्राक् संस्कृतस्योल्लेखेन संस्कृतस्य प्राकृतात् प्राग्वर्त्तित्वमुक्तं भवति, न च प्राकृत-संस्कृतशब्दयोर्व्युत्पत्तिः प्राकृतस्य प्रकृति-प्राप्तत्वं संस्कृतस्य च संस्कारशालित्वं स्फुटं बोधयतीति प्राकृतस्यैव प्राक्सत्त्वं न संस्कृतस्येति वाच्यम्, प्राकृतस्य प्रकृतिप्राप्तत्वेऽपि तद्भाषात्वस्य साधकाभावात्। न हि मातुर्गर्भादुत्पन्नेन बालेन शनैः शनैर्वृद्धोच्चारितान् गवादिशब्दान् अनुकृत्योच्चारिता गावी, गोणी, गोतादिशब्दा भाषेति व्यपदेशं भजन्ते, तेषां भाषाया अनुकरणमात्रत्वेन स्फुटमपभ्रंशव्यपदेशपर्यवसायित्वात्। अत एव 'इयमस्य मातृ-

भाषा' इति व्यवहारो मातुः शब्देषूपपद्यते न तु बालोदीरितेषु यत्तद्ध्वनिषु। न हि मातुर्भाषातः प्राग् बालोदीरितानां वाचां सत्त्वमस्ति। मातृभाषा च संस्कृता न तु बालोदीरितापभ्रंशरूपा। बालस्तु क्रमेण मातुर्गृहीतवर्णसंस्कारः सन् यां संस्कृतां भाषां प्रयुङ्क्ते सा तस्य मातृभाषा भवति। एतेन संस्कृताया भाषाया एव पूर्ववर्त्तित्वं न तु प्राकृतस्य। बालप्रकृतिप्राप्तात् प्राकृतात् तन्मातृभाषायाः स्फुटं पूर्ववर्त्तित्वात्। मातृभाषायाश्च मात्राश्रयत्वात् मातुश्च बालात् पूर्ववर्तित्वनियमात्।

अस्तु वा प्राकृतस्यैव पूर्ववर्त्तित्वं, नैतावता पाणिनिसूत्रेषु प्रयुक्तस्य भाषा शब्दस्य संस्कृतमात्रविषयत्वम् अपहीयते। 'इष्टान्वाख्यानं खल्वपि भवति। इति वदता भगवता भाष्यकृता संस्कृतानामिष्टानामेव शब्दानां साधुत्वोपपादनाय व्याकरणस्य प्रवृत्तिबोधनेन भाषात्वेन संस्कृतभाषाया एव सर्वत्र ग्रहीतुमिष्टत्वात्।

सा च भाषा लोकस्याखिलस्य भाषैव, न तु समाजविशेषस्य। पाणिनिसूत्रेषु पठितस्य 'भाषायाम्' इति पदस्य 'लोके' इति सार्वत्रिकव्याख्यानात्। सिद्धं तावन्निर्विवादं लोकभाषात्वं संस्कृतस्य। लोकशब्दश्चायं न खलु भारतभूभागमात्रे रूढः, अपितु समग्रस्य प्राणिलोकस्य वाचकः। सप्तद्वीपा वसुमती, त्रयो लोकाः···' इति भाष्यकृद्वचनेन त्रयाणामपि लोकानां संस्कृतशब्दप्रयोगविषयत्वसंसिद्धेः।

अथ या लोकभाषा भवति, तामेवाश्रित्य लोकः कवयति काव्यानि, कथयति कथाः, आख्यात्याख्यायिकाः, उपन्यस्यत्युपन्यासान् अभिनयत्यभिनयान्, ग्रथ्नाति ग्रन्थान्, लिखति लेखाँश्च। अत एव प्राग् व्यतीतेऽपि विक्रमार्कस्य वर्षसहस्रे संस्कृतं विहाय नान्यस्याः कस्याश्चिद् भाषायाः सत्त्वं भारतीयवाङ्मये दृग्गोचरीभवति।

विक्रमस्य त्रयोदश्यां शताब्द्यां श्रीहर्षेण विरचिते नैषधीयचरिते 'अन्योन्यभाषानवबोधभीतेः' इत्युक्त्या भारतस्य विविधेषु भागेषु विविधानां वाचां सत्त्वं यद्यपि तत्र काले प्राप्तं भवति, तथापि निखिलस्य लोकस्य सम्पर्कभाषा तदानीमपि संस्कृत्रिमैवासीदिति तत्रैव 'संस्कृत्रिमाभि-र्व्यवहारवत्सु' इति वचनेन सुसाधु सिद्धयति। अत एव विक्रमार्कस्य त्रयोदशशताब्द्यवधिके काले यावतियं वाङ्मयं संस्कृते निर्मितम् उपलभ्यते, न तस्य तुलाम् आरोढुमर्हति, विश्वस्य समग्रं वाङ्मयम् एकत्र सम्भूयापि।

अद्यत्वे यद्यपि नास्ति संस्कृतं जनसाधारणस्य भाषा, तथापि नापरिचिता सर्वथा सा तस्य। जन्मनः प्रभृति जायमानेषु संस्कारेषु हि सर्वोऽपि नामार्यजातीयकः सम्प्रत्यपि तामेव व्यवहरति। संस्कृतसाहित्यनिर्माणस्य चिरन्तनी धारा तु

कदापि कस्मिन्नपि युगे नावरुद्धा। अकब्बरशाहजहानादियवनशासकानां समयेऽपि संस्कृतसाहित्यस्य प्राचुर्येणोपलब्धेः प्रामाण्यात्। अत एवेयं भाषा निर्जरवागिति, अमरवाणीति, देवभाषेति शाश्वतान् व्यपदेशान् बिभर्त्ति, अद्यापि चास्यां भाषायां काव्यानि, नाटकानि, कथाऽऽख्यायिकादि चेति विपुलं साहित्यं सृज्यमानमास्ते। अद्यापि नवान् नवान् विषयानधिकृत्य कृतैः काव्यनाटकादिभिः संस्कृतकवयः संस्कृतभाषायाः साहित्यभाण्डागारपूरणे निरन्तरं संलग्नाः सन्ति। प्रतिवर्षं शताधिकाः संस्कृतग्रन्थाः काव्यनाटकादयो निर्मिताः, प्रकाशिताः, पुरस्कृताश्च भवन्तीति विदितचरं सर्वेषाम्।

यद्यप्यनेके हठात्प्रवृत्ताः कवियशःप्रार्थिनो मन्दा अपि अर्थलोलुपाः काव्यकर्मणि सम्प्रति प्रवृत्ताः सन्तीति नास्त्यविदितमस्माकम्, तथापि शब्देऽर्थे रसेऽलंकारे गुणे रीतौ च सिद्धास्तादृशाः सुकवयोऽपि खलु काव्यवर्त्मनि प्रवर्तमानाः सन्ति येषां कविकर्म प्राचां भूमिमवगाहमानमालोक्यते। प्रकृतकाव्यप्रबन्धस्य कविः श्री विष्णुदत्तशर्मा महाभागस्तादृशेष्वेव सुकविष्वन्यतमत्वं भजतीति नः प्रत्ययः।

मयराष्ट्रवास्तव्यः, व्याकरण-साहित्य-दर्शन-ज्यौतिषाचार्यः, हिन्दी-संस्कृतेति-विषयद्वये एम. ए. इत्युपाधिभृत् सुकविः श्रीविष्णुदत्तशर्मा स्थानीये एन. ए. एस. नाम्नि-स्नातकोत्तरकालेजे सप्तदशभिर्वर्षैः स्नातकाँस्तदुत्तराँश्च बहुसंख्याकाँश्छात्रान् अध्यापयन्नध्यापकसमाजे समर्जितप्रतिष्ठोऽपि सततं काव्यकर्मणि प्रवृत्ताः कवीनामपि पङ्क्तौ पूर्वासु संख्यासु संख्यात इति को नाम न जानाति मयराष्ट्र-मण्डलीयकविपरम्परापरिचितो जनः। अस्य हि कृतिनः कवेः कृतिः 'श्रीमतीन्दिरा-गान्धिचरितामृतं' नाम काव्यं गतवर्षे—उत्तरप्रदेशीय संस्कृतसाहित्यैकादमीतः पुरस्कृतमभूदिति सर्वविदितं नाम। अन्ये चाप्यस्य सुकवेः प्रबन्धाः प्रकाशिताप्रकाशिताश्च सन्तीत्यपि वयं विद्मः।

अथ यदिदं नव्यं 'श्रीगुरुनानकदेवचरितं' नाम भव्यं सप्तदशसर्गात्मकं काव्यमनेन महाभागेन कृतं तत् कृत्स्नं पर्यालोच्य नितरां चमत्कृतिमावहति नश्चेतः। अस्मिन् हि काव्ये रसानां परिपक्वता, भावानां भव्यता, भाषाया भावानुरूपता, स्थाने च शब्दार्थालङ्काराणां सन्निवेशचारुता, गुणानां वृत्त्यनुसारिता, वृत्तीनाञ्च गुणानुवृत्तितेति समग्रमपि सत्काव्यानुगुणं सामग्र्यं सहृदयहृदयाह्लादनक्षमां महतीं क्षमतामाधत्त इति यत् सत्यं प्राशस्त्यं भूयोभूयोऽर्हतितरां नितराम्। महान्तं सन्तं श्रीमन्तं गुरुं नानकदेवं संस्कृतकाव्यविषयतासरणिम् अवतार्य प्रायेण सद्वंशजानां भूपानां चरित्रवर्णने ससासक्तगवीनां संस्कृतकवीनाम् 'अन्यद्वा सज्जनाश्रयम्' इति महाकाव्यलक्षणोक्ते सज्जन-चरिते विषये चिरन्तनीमुपेक्षामवमूलयता कवयता

महद्गौरवम् उपनीता गीर्वाणवाणीति नात्र सन्देहलेशोऽपि। यद्यपि न नवीनस्तथापि चिरादुपेक्षितः संस्कृतकवीनां पन्थाः 'सन्त' इति प्रसिद्धेषु पुरुषेषु प्रधानस्य पुंसोऽस्य श्रीगुरोर्नानकदेवस्य चरितं काव्याक्षरबन्धैर्निबध्य सुविहिताद्दुतकर्मणा कविवरेण श्रीमता विष्णुदत्तशर्मणा प्रकाशीकृत इति बहूनां मार्गदर्शकत्वेन महाकविरयं भूयोभिर्वृद्धिवादैरभिवर्धनीयः संस्कृतप्रणयिभिः। सर्वविधेन काव्यवैभवेन समृद्धेऽस्मिन् सत्काव्ये सर्वामप्यनन्यसाधारणीमस्य कमनीयतां पृष्ठतो निधाय केवलान् गुरोर्नानकदेवस्य मुखादुपदिष्टान् उपदेशानेव यदि पश्यन्ति सन्तस्तदनेनैव हेतुना केवलेन कविरयं महामहत्याः प्रशंसायाः पात्रं भवतीति मे दृढ़म् अभिमतम्। सुरापानप्रवृत्तेर्निरोधाय, वेश्यावृत्तिनिरासाय, डाकुसमस्यासमाधानाय, अस्पृश्यतानिवारणाय, हिन्दुमुस्लिमैक्यसम्पादनाय, साधुसन्यासिनां भिक्षावृत्तेर्निवृत्तये, अन्यासामप्येवंविधानां सामयिकीनां राष्ट्रियसमस्यानां समाधानाय गुरोर्नानकदेवस्य मुखेन कविना प्रोक्ता उपदेशामृतसूक्तयोऽद्य यादृशीं प्रासङ्गिकतां वहन्ति सा खलु नान्यत्र कुत्रापि काव्येषूपलभ्यते। एताः सूक्तयो विषोपमाभिराभिः समस्याभिर्म्रियमाणं राष्ट्रं जीवयितुं यत् सत्यम् अमृतायिष्यन्ते सुतरामिति मे दृढा प्रतीतिः। उत्तरकालेऽयं कृती कविवरः पुनरितोऽप्युत्तमाभिः कमनीयकाव्यकृतिभिः संस्कृतसाहित्यश्रियं संवर्धयिष्यतीति सदाशया सह विरमति सुरगवीसमुपासको—

विदुषां वशंवदः—

प्रभुदत्तस्वामी

३, मानसरोवर, सिविल लाइन्स,
मेरठ
कार्त्तिक शुक्ला पूर्णिमा
सं० २०३६ वि०

# ॥ श्रीगुरुनानकदेवचरितम् ॥

## (महाकाव्यम्)

### -वन्दना-

विघ्नान् निहन्तुं निखिलान् निजास्ये रुषं दधानं महसां निधानम् ।
चित्ते च भक्तेषु दयारसार्द्रं वन्दे गणानामधिपं द्विरूपम् ॥१॥

समग्रविघ्नों को नष्ट करने के लिये, अपने मुख में क्रोध को धारण करने वाले, तेज के भण्डार, भक्तों के विषय में, चित्त में दयारूपी रस से आर्द्र, दो रूप वाले (क्रुद्ध एवं रसार्द्र अथवा मनुष्य एवं गजरूप वाले) गणाधिपति (श्री गणेश) जी को नमस्कार करता हूँ ।

अन्तः स्मृताऽर्थस्रजमाशु सृष्ट्वा चकास्ति या चेतसि सत्कवीनाम् ।
वाग्देवता सा प्रकृतानुरोधं शब्दार्थबोधं हृदि मे दधातु ॥२॥

हृदय में स्मरण की हुई भी, जो सरस्वती देवी, श्रेष्ठ कवियों के चित्त में, शब्दार्थ रूपी माला को शीघ्र ही निर्मित करके दीप्तिमती है । वही वाणी की अधिष्ठात्री देवी प्रकरणानुकूल शब्दार्थ का बोध, मेरे हृदय में धारण करायें ।

रामो विधत्ताद् विपदां विरामं कृष्णश्छिनत्ताद् विषयेषु तृष्णाम् ।
श्रीशङ्करः शं तनुतात् सदा मे देवास्त्रयोऽमी विहरन्तु चित्ते ॥३॥

भगवान् श्रीराम विपत्तियों का अन्त करें । भगवान् श्रीकृष्ण विषयों से तृष्णा को मिटायें । भगवान् श्रीशंकर सदा मेरे लिये कल्याण का विस्तार करें । तथा ये तीनों देवता मेरे चित्त में विहार करें ।

संस्मृत्य भक्त्या गुरुपादपद्मं रजोऽञ्जनेनास्य विशोध्य दृष्टिम् ।
काव्ये निबध्नामि महत्पवित्रं चित्रं चरित्रं गुरुनानकस्य ॥४॥

भक्तिपूर्वक श्रीगुरु के चरणकमलों का स्मरण कर गुरु के रजोरूपी अञ्जन से दृष्टि को निर्मल करके श्रीगुरुनानक के विचित्र एवं महान् पवित्र चरित्र को काव्यात्मक रूप में प्रणयन करता हूं ।

तापत्रयस्यापि निवारणाय, संसारदावानल—नाशनाय ।
कृतावताराय महेश्वराय, नमो नमः श्रीगुरुनानकाय ॥५॥

आध्यात्मिक, आधिभौतिक और आधिदैविक दुःखों के निवारण के लिए, संसार रूपी दावाग्नि के शमन के लिये अवतरित हुए, महेश्वर स्वरूप, श्रीगुरुनानक देव के लिए बारम्बार नमस्कार है।

गुरूपदेशामृतरक्षणाय, समाधिनिष्ठाय मुनीश्वराय ।
शान्ताय, पुण्याय, जगद्धिताय, गुर्वङ्गदायेव नमः शिवाय ॥६॥

गुरु के उपदेशामृत की रक्षा के लिए, समाधि में तल्लीन हुए, शान्त, पुण्यात्मा, लोक-हितकारी, मुनिश्रेष्ठ, शिवतुल्य, श्रीगुरु अङ्गददेव के लिए नमस्कार है।

विज्ञानराशेरतुलं स्वरूपम्, नामानुरूपं गुणमादधानम् ।
लोकस्य सर्वस्य मनोनिलीनम्, गुरुं नमामोऽमरदासदेवम् ॥७॥

विज्ञानराशि की अनुपममूर्ति, नाम के अनुकूल ही गुणों को धारण करने वाले, सम्पूर्ण प्राणियों के मन में व्याप्त, श्रीगुरु अमरदासदेव को हम प्रणाम करते हैं।

गुणैर्वरिष्ठाय दयान्विताय, चारित्र्य-दाक्षिण्यसुचर्चिताय ।
गुरुप्रवीराय भवेश्वराय, श्रीरामदासाय नमो नमो नः ॥८॥

गुणों के कारण वरिष्ठ (श्रेष्ठ), दयालु, शील, सुजनता, नम्रता तथा शिष्टता आदि के लिये प्रसिद्ध, जगन्नाथ, वीर-शिरोमणि, गुरु श्रीरामदास जी के लिये बार-बार नमस्कार है।

भवाब्धिपाराय सुपोतरूपम्, कैवल्य-माँगल्यविधायकं तम् ।
कर्मावतारञ्च गुरुं कृपालुम्, नमामि गुर्वर्जुनदेवमीशम् ॥९॥

भवसागर को पार करने के लिये जहाजतुल्य, शुभमोक्ष के प्रदाता, कर्मनिष्ठ, दयालु, ईशस्वरूप गुरु श्री अर्जुनदेव को प्रणाम करता हूं।

यशः प्रशस्तं धनधान्ययुक्तम्, देशप्रसिद्धं समुदारवंशम् ।
सर्वेश्वरं व्यापकमादिदेवम्, हरादिगोविन्द—गुरुं नमामः ॥१०॥

शुद्ध कीर्ति वाले, धन धान्य से युक्त, देशों में प्रसिद्ध, उदारवंश में समुत्पन्न, सर्वेश्वर, व्यापक, आदिदेव श्री हरगोविन्दसिंह नामक गुरु को हम प्रणाम करते हैं।

परोपकाराय परापतन्तम्, धर्म्यं च मार्गं सुनिबोधयन्तम् ।
नित्यं नमामो जगदेकनाथम्, गुरुं प्रकृष्टं हरिरायमीड्यम् ॥११॥

परोपकार के लिये सन्ताप भोगने वाले, धार्मिक मार्ग के उपदेशक, जगत् के एक मात्र स्वामी श्रेष्ठ गुरु, स्तुत्य, श्री हरिराय को हम नमन करते हैं।

विशुद्धवृत्तं समनन्त-कीर्तिम्, परापरज्ञं गुणिनां गरिष्ठम् ।
मेधाविनं चात्मवतां महान्तम्, गुरुं नमामो हरिकृष्णमिन्द्रम् ॥१२॥

विशुद्ध आचरण वाले, अनन्त कीर्ति-सम्पन्न, ऐहिक और पारलौकिक ज्ञान के विज्ञाता, गुणियों में अग्रणी, बुद्धिमान्, आत्मवेत्ताओं में महान्, स्वामी, गुरु श्रीहरिकृष्ण को हम प्रणाम करते हैं।

म्लेच्छादि-सन्तप्तसुमानवानाम्, क्लेशं विहन्तुञ्च समागताय ।
गुरु-प्रकाण्डाय परेश्वराय, नमो नमस्तेगबहादुराय ॥१३॥

यवनों के द्वारा पीड़ित मानवों के कष्टों को नष्ट करने के लिये अवतीर्ण हुए, परमेश्वरतुल्य, गुरुओं में श्रेष्ठ, श्रीतेगवहादुर के लिये बार-बार नमस्कार है।

स्वदेशरक्षाव्रत-बोधनाय, प्राप्ताय धाराधरणीश्वराय ।
तपस्विने श्रीगुरुपुङ्गवाय, गोविन्दसिंहाय नमो नमो नः ॥१४॥

जन्मभूमि की रक्षा के व्रत का बोध कराने के लिये अवतरित, नदीभूमीश्वर, तपस्वी, गुरुओं में श्रेष्ठ, श्रीगुरुगोविन्दसिंह के लिये हमारा बार-बार नमस्कार है।

इच्छेत् सुवाणीं महतां गुरूणाम्, श्रोतुं सदा यां जगतीतलेऽस्मिन् ।
पठेत् तदा नित्यमतन्द्रितोऽसौ, ग्रन्थं गुरोर्गौरवपूर्णमाशु ॥१५॥

इस भूमण्डल में सर्वदा महान् गुरुओं की श्रेष्ठ वाणी को सुनने की इच्छा करे तो गुरुओं के गौरव से पूर्ण इस ग्रन्थ को सावधान होकर तुरन्त पढ़े।



# ॥ श्रीगुरुनानकदेवचरितम् ॥

## (महाकाव्यम्)

### अथ प्रथमः सर्गः

अनन्तपारोत्थिततुङ्गतुङ्गैः शृङ्गैः पयः–फेननिभैः हिमाद्रेः ।
सुवेष्टितश्चाब्धितरङ्गसङ्घै–र्जयत्यसौ भारतवर्षदेशः ॥१॥

जो हिमालय पर्वत की आकाश पर्यन्त ऊँची-ऊँची दुग्धफेनसदृश चोटियों से, और तरङ्गायमान समुद्र से परिवेष्टित है। उस भारतदेश की जय हो।

यस्योत्तरस्यां गगनावलम्बी हिमालयस्तिष्ठति देवतात्मा ।
अपां पतिर्यस्य च दक्षिणस्यां जयत्यसौ भारतवर्षदेशः ॥२॥

जिसकी उत्तर दिशा में देवप्रिय, गगनस्पर्शी हिमालय है और जिसकी दक्षिण दिशा में जलनिधि (सागर) स्थित है। उस भारतदेश की जय हो।

सुधा-समैः स्वादुजलैः प्रपूर्णा निसर्गतः कल्मषदाहदक्षाः ।
वहन्ति यत्राद्रिसुतास्तटिन्यो जयत्यसौ भारतवर्षदेशः ॥३॥

जहाँ अमृततुल्य सुमधुर जल से प्रपूर्ण, स्वभावतः पापप्रक्षालन में समर्थ, हिमालम-निर्गता गंगा आदि नदियाँ बहती रहती हैं। उस भारतदेश की जय हो।

गङ्गा यदङ्गानि तरङ्गिताङ्गा सुधोपमैः सिञ्चति वारिपूरैः ।
कलिन्दकन्या च तथैव शोणो जयत्यसौ भारतवर्षदेशः ॥४॥

यथा तरङ्गित गङ्गा जिसके अंगों को अमृततुल्य जलप्रवाहों से सींचती रहती है, तथैव यमुना तथा शोण नदियां जिसका अभिषेक करती हैं। उस भारत देश की जय हो।

हरीतिमाभा-समलङ्कृता भूः सन्दर्शकानां हृदयेषु यत्र ।
तनोति रागं विलनोति मोदं जयत्यसौ भारतवर्षदेशः ॥५॥

जहां हरित कान्ति से सुशोभित धरती, दर्शकों के हृदय में प्रेम और आनन्द को विकसित कर देती है। उस भारतदेश की जय हो।

राजन्ति यस्मिन् शुचिकाननानि विहङ्गमैर्नित्यनिनादितानि ।
फलैश्च पुष्पैश्च समन्वितानि जयत्यसौ भारतवर्षदेशः ॥६॥

जिस देश में नित्य पक्षियों के कलरव से युक्त, फल और फूलों से समन्वित पवित्र कानन हैं। उस भारतदेश की जय हो।

न श्रूयते यत्र न दृश्यते वा कदापि सुप्तावपि जीवलोकैः ।
रिक्तिर्मणीनां च धनादिकानां जयत्यसौ भारतवर्षदेशः ॥७॥

जहां स्वप्न में भी प्राणियों के द्वारा धन धान्यादिक और रत्नों का अभाव सुना अथवा देखा नहीं जाता। उस भारतवर्ष की जय हो।

नानाविधैः प्राकृतिकैः पदार्थैः वसुन्धरा यत्र सदा प्रपूर्णा ।
क्षणे क्षणे वर्षति मोदयुक्ता जयत्यसौ भारतवर्षदेशः ॥८॥

नानाविध नैसर्गिक पदार्थों से परिपूर्ण जिसकी धरती प्रतिक्षण आनन्दरूपी मोतियों की वृष्टि किया करती है। उस भारतदेश की जय हो।

पदे पदे यत्र शुभा नगर्यः स्वर्लोकसोपानततिप्रकल्पाः ।
काश्यादि-काञ्च्यादि-पवित्रनाम्न्यो जयत्यसौ भारतवर्षदेशः ॥९॥

जहां कदम कदम पर, काशी, काञ्ची आदि, स्वर्गलोक की सोपान (सीढ़ी) पंक्ति के तुल्य शुभ नगरियां हैं। उस भारतदेश की जय हो।

यस्य स्थितिर्भूवलयेऽखिलेऽपि प्रधानभूता च चिरन्तनी च ।
अङ्गीकृता सर्वजनैः सदैव जयत्यसौ भारतवर्षदेशः ॥१०॥

सकल जनसमूह द्वारा, अखिल भूमण्डल पर, जिसकी स्थिति सर्वदा प्राचीनतमा तथा सर्वोत्कृष्टा मानी गई है। उस भारतदेश की जय हो।

क्रमागतानां सुभगै ऋतूनां फलैश्च पुष्पैश्च दलैश्च यत्र ।
समर्चितो नन्दति जीवलोको जयत्यसौ भारतवर्षदेशः ॥११॥

जहाँ क्रमागत सुन्दर षड् ऋतुओं के फलों फूलों पत्रों एवं भावों से अभिनन्दित प्राणिवर्ग प्रसन्न रहता है। उस भारतवर्ष की जय हो।

महामनोज्ञां सुनिरीक्ष्य यस्य प्रभूतभूतिं मनुजा धरित्र्याः ।
स्तुवन्ति दूरादपि हर्षिता यं जयत्यसौ भारतवर्षदेशः ॥१२॥

जिसकी मनोज्ञ प्रभूत-विभूति को देखकर दूर स्थित भी संसार के लोग हर्षित हुए स्तुति किया करते हैं। उस भारतदेश की जय हो।

यत्र स्थितं खं पवनश्च नीरं हुताशनं दिव्यविभान्वितानि ।
भूत्वा स्वयं यं समुपासते वै जयत्यसौ भारतवर्षदेशः ॥१३॥

जहाँ आकाश, पवन, पानी एवं अग्नि आदि स्वयं दिव्य कान्तिमान् होकर, जिसकी उपासना करते हैं। उस भारतदेश की जय हो।

सूर्यो यथा रात्रिपतिस्तथैव प्रभान्वितौ यत्र समागतौ द्वौ ।
न वाञ्छतो गन्तुमहो सशीघ्रं जयत्यसौ भारतवर्षदेशः ॥१४॥

जहाँ, जिस प्रकार सूर्य, उसी प्रकार देदीप्यमान चन्द्रमा भी, एक बार आने के बाद, पुनः यथाशीघ्र जाने की इच्छा नहीं करते। उस भारतदेश की जय हो।

उद्घोषिता यत्र ऋषीन्द्रवृन्दैः सज्ज्ञानविज्ञानमयाश्च वेदाः ।
अद्यापि मन्त्राश्च नभःसु लीना जयत्यसौ भारतवर्षदेशः ॥१५॥

जहाँ श्रेष्ठ-ऋषिगण से समुद्घोषित सज्ज्ञान और विज्ञानमय वेद और मन्त्र आज भी आकाश में व्याप्त हैं। उस भारतदेश की जय हो ।

नरैश्च यस्मिन् क्रियतेऽनुवृत्तिः सत्कर्मणां शास्त्रनिबोधितानाम् ।
भवात् प्रभृत्याप्रलयं समस्तै-र्जयत्यसौ भारतवर्षदेशः ॥१६॥

जिस देश में, सकल मनुष्यों के द्वारा, सृष्टि के प्रारम्भ से लेकर प्रलयपर्यन्त, शास्त्रप्रतिपादित सत्कर्मों का आचरण किया जाता है। उस भारतदेश की जय हो ।

स्वदेशिनो वा च विदेशिनो वा निरीक्षणे मग्नधियः कवीशाः ।
यस्योपमां नैव नवां लभन्ते जयत्यसौ भारतवर्षदेशः ॥१७॥

जिसका सौन्दर्य देखकर स्वदेशी अथवा विदेशी महाकवि उपमा के लिये लालायित भी कोई नयी उपमा नहीं ढूँढ पाते हैं। उस भारतदेश की जय हो ।

सार्वत्रिकीं यस्य विलोक्य शोभां वृन्दारका मुग्धमनोऽभिरामाः ।
सदैव वाञ्छन्ति निजं निवासं जयत्यसौ भारतवर्षदेशः ॥१८॥

जिसकी सर्वत्र विद्यमान कमनीय शोभा को देखकर मुग्ध हृदय, सुन्दर देवता भी (जहाँ) सदैव निवास करने की इच्छा करते हैं। उस भारतदेश की जय हो ।

जने जने तिष्ठति यत्र धर्मो धर्मान्वितं क्रीडति कान्तकर्म ।
शतायुषो यत्र जना वसन्ति जयत्यसौ भारतवर्षदेशः ॥१९॥

जहां जन-जन में धर्म एवं धर्म-समर्थित सत्कर्म विद्यमान रहता है तथा जहाँ के निवासी शतायु होते हैं। उस भारतदेश की जय हो ।

धर्मस्य यस्मिन् प्रमुखत्वमस्ति प्रमाणभूतं निखिलस्य पुंसः ।
ग्लानिश्च धर्मस्य हरिं नितान्तं दुःखाकरोति प्रतिकारहेतोः ॥२०॥

जिस देश में सकल पुरुषों के प्रमाणभूत धर्म की प्रमुखता है और अधुना 'धर्म के प्रति ग्लानि' पूर्णरूप से प्रतीकार के हेतु श्री हरि को नितान्त दुःखी बनाती है।

नार्यो यदीयाः पतिधर्मभक्ता मनोऽभिरामा गृहकर्मदक्षाः ।
लसन्ति पुत्रैर्लसिताङ्कपाल्यः जयत्यसौ भारतवर्षदेशः ॥२१॥

जिसकी धरती पर गृहकर्म में दक्ष पतिव्रता सुन्दरियाँ पुत्रों से परिपूर्ण गोद वाली होकर सुशोभित होती हैं। उस भारतदेश की जय हो।

एकप्रिया बन्धनचारुबद्धाः श्रद्धां वदन्तश्च नराः स्वभार्याम् ।
पिबन्ति गार्हस्थ्यरसं सतोषं जयत्यसौ भारतवर्षदेशः ॥२२॥

जहाँ एक पत्नीव्रतधारी पुरुष अपनी भार्या (पत्नी) को अच्छा समझते हुए सन्तोषपूर्ण गार्हस्थ्य जीवन का रसपान करते हैं। उस भारतवर्षदेश की जय हो।

यत्र स्थिता च प्रकृतिः प्रसन्ना क्षणे-क्षणे धारयति प्रकामम् ।
नवं नवं मोहकरं स्वरूपं जयत्यसौ भारतवर्षदेशः ॥२३॥

जहाँ स्थित प्रकृति प्रतिक्षण प्रसन्न हुई नूतन-नूतन कमनीय, मोहक स्वरूप को धारण करती है। उस भारतदेश की जय हो।

न न्यूनता काचिदपि प्रमाणैः प्रमाणिता वा परिकल्पिता वा ।
दुनोति यत्रामित-जीववर्गं जयत्यसौ भारतवर्षदेशः ॥२४॥

जहाँ किसी भी प्रकार की कोई भी न्यूनता (कमी) प्राणि-समूह को कदापि कष्ट नहीं दे पाती। यह कथन प्रमाणों से प्रमाणित है अथवा सुकल्पित है। उस भारतदेश की जय हो।

शोभां यदीयां प्रविचार्य पूर्णां सर्वप्रकारेण सुपूर्णताञ्च ।
धृतावतारा विलसन्ति देवा जयत्यसौ भारतवर्षदेशः ॥२५॥

जिसकी सर्व प्रकार की परिपूर्णता एवं सुन्दरता का विचार करके देवगण जहाँ अवतरित होकर सुशोभित होते हैं। उस भारतदेश की जय हो।

स्वर्गाद् धरा यस्य गरीयसी यद्गीतं च गायन्ति सुराः सहर्षम् ।
सुरोत्तमा यत्र नरा वसन्ति जयत्यसौ भारतवर्षदेशः ॥२६॥

जिसकी वसुन्धरा स्वर्ग से भी बढ़कर है, जिसकी विरुदावली का गान देवता सहर्ष किया करते हैं। जहां देवों से भी उत्कृष्ट कोटि के पुरुष निवास करते हैं। उस भारतदेश की जय हो।

धर्मस्य दृष्ट्वा सहसैव यत्र ग्लानिं कथञ्चित् करुणार्द्रचेताः ।
हरिः स्वयं धारयति स्वदेहं जयत्यसौ भारतवर्षदेशः ॥२७॥

जहाँ किसी भी प्रकार की धर्मग्लानि को देखकर करुणा से द्रवीभूत, भगवान् श्रीविष्णु स्वयं सहसा अवतार धारण करते हैं। उस भारतदेश की जय हो।

लोकोत्तरं भारत-भारतं यत् ख्यातिश्च यस्यास्ति समस्तलोके ।
यस्मान्न कस्मादपि भिन्नहेतो देवोत्तमात् साधुजनावतारात् ॥२८॥

जो भारतवर्ष इतना लोकोत्तर है और जिसकी विश्व में ख्याति है। वह सब (ख्याति) किसी अन्य-कारण से नहीं अपितु देवताओं से भी उत्तम सन्तों के अवतरण से ही है।

यदा यदा दुष्टजनाः स्वदेशे प्रयान्ति वृद्धिं वसुधां दलन्तः ।
विगर्हितैर्दुश्चरितैर्महान्तस्तदा तदा साधुजना भवन्ति ॥२९॥

भारतवर्ष में जब जब दुष्टजन, निन्दित दुराचारों से पृथ्वी को पीड़ित करते हुए विकास को प्राप्त करते हैं। तब तब (यहां) महात्मा साधुजन अवतरित हुआ करते हैं।

अयन्तु कालोऽस्ति करोति लीलां प्रशंसितां वा च सुकुत्सितां वा ।
विमोह्य बुद्धि हृदयं नराणां दोषोऽस्ति कस्यापि न किञ्चिदत्र ॥३०॥

यह तो समय ही है, जो लोगों की बुद्धि एवं हृदय को विमोहित करके अच्छी अथवा बुरी लीला किया करता है। इस विषय में किसी का कुछ भी दोष नहीं है।

तथापि या शास्त्रपरम्पराप्ता व्यवस्थितिः सा तु विनाश्य दुःखम् ।
ददाति लोकाय महाजनानां विनष्टनाथा विधवेव नूनम् ॥३१॥

फिर भी काल क्रमात् प्राप्त हुई शास्त्र-परम्परा-जन्य-व्यवस्था यदि नष्ट होती है तो पतिहीना विधवा की भांति सज्जनों को निश्चय ही दुःख देती है ।

व्यवस्थितेः शास्त्रसमर्थितायास्तस्या मनःक्षोभकरं विलापम् ।
श्रुत्वा समर्चाचितसाधवस्ते व्यथाभितप्ता विलपन्ति कामम् ॥३२॥

उस शास्त्र समर्थित व्यवस्था का मनोक्षुब्धकारी विलाप सुनकर, व्यथित हृदय, पूज्य सन्तजन स्वयं भी अतिशय विलाप करने लगते हैं।

पिबन्ति खादन्ति चरन्ति सन्तः स्वपन्ति खेलन्ति तथैव लोके ।
यथान्यसाधारण-मानवास्ते तथापि तद्भिन्नतरा भवन्ति ॥३३॥

इस संसार में सन्तजन भी खाना, पीना, सोना, खेलना, कूदना इत्यादि विविध सहज कर्म इसी प्रकार करते हैं, जैसे अन्य साधारण लोग। किन्तु फिर भी (साधारण जन से) कुछ भिन्न ही होते हैं।

त्यागेन शीलेन धनैश्च धान्यैः सन्तः मनोवाक्तनुभिश्च जीवैः ।
दुःखार्द्रभूता धरणीजनानां हरन्ति दैन्यं कटुताञ्च कुत्साम् ॥३४॥

परदुःख से द्रवीभूत सन्त अपने त्याग, शील, धन-धान्य, देह, मनवाणी एवं प्राणों का समर्पण करके भी लोगों की दीनता, कटुता और कुत्सा (दुर्वचन) का हरण करते हैं।

व्यवस्थितिः शास्त्रपरम्पराणां पुनर्महामोदसमन्वितानाम् ।
कुर्वन्ति सन्तः धरणीतलेऽस्मिन् घोराणि दुःखान्यपि धर्षयित्वा ॥३५॥

इस धरती पर सन्तजन महामोद समन्वित-शास्त्र-परम्परा की पुनर्व्यवस्था दुख सहकर भी करते हैं।

जयन्ति सन्तः सरलार्द्रचित्ता दयाब्धयः शाश्वतधर्मयुक्ताः ।
द्रवन्ति ये स्वार्थमपास्य दुःखं निरीक्ष्य दुःखार्दितमानवानाम् ॥३६॥

दुःखार्दित मानवों के दुःख देखकर स्वार्थविहीन, नित्य धर्मानुष्ठानरत, दयार्द्र, धर्मात्मा, सरल हृदय, दयासिन्धु सन्त सचमुच उत्कृष्ट हैं।

एतादृशाश्चेन्न भवन्ति सन्तः युगे युगे मानवलोकपृष्ठे ।
धर्मस्य का का च गति-र्भवेऽस्मिन् सुकर्मणः स्याच्च कथा शिवस्य ॥३७॥

प्रत्येक युग में धरती पर अवतरित होने वाले ये सन्त यदि न होते तो धर्म कर्म एवं लोक मङ्गल की क्या दशा होती ?

कश्चित्परो नैव नवो मनोज्ञस्तस्मात्प्रभोः साधुजनो विशुद्धः ।
स एव देवः कमलासनस्थो नृसिंह-रूपादि-धृतावतारः ॥३८॥

सन्तजन उस नृसिंहादि अवतार-धारी कमलासनस्थ परमप्रभु भगवान् श्री विष्णु से भिन्न कोई दूसरे नहीं है। अपितु वही हैं।

एतादृशानां महिमान्वितानां स्तुतिः कृपाकीर्तिसमुन्नतानाम् ।
कस्मै जनायेह न रोचते वा क्षेमप्रदा साधुगुणान्वितानाम् ॥३९॥

भला ऐसा कौन है ? जिसे परमकृपालु महामहिमशाली सन्तों की कल्याण-कारिणी स्तुति प्रिय न लगे।

इयं धरा सा प्रभवन्ति यस्यां वसिष्ठवाल्मीकिपराशराद्याः ।
कृष्णश्च रामश्च शिवश्च नैके प्रथा-प्रभा-मण्डितनानकोऽपि ॥४०॥

यह वह भूमि है, जहाँ वसिष्ठ, वाल्मीकि, पराशर आदि ऋषिजन और राम, कृष्ण तथा शङ्कर आदि देवता ही अवतरित नहीं हुए, अपितु प्रभामण्डित नानक भी यहीं अवतरित हुए हैं।

श्रीनानको योऽस्ति गतोऽत्र देशे ख्यातिं गुरोः सिक्खमहाजनानाम् ।
यस्याम्बुज-स्पर्धिपदद्वयं ते नमन्ति वाञ्छन्ति मनुष्यतां ये ॥४१॥

श्रीनानक वही हैं, जिनकी ख्याति सिक्खों के गुरु के रूप में है तथा मानवता के उपासक, जिनके चरण कमलों में प्रणाम किया करते हैं।

तमेव नत्वाद्य सभक्तिभावस्तस्यैव गंगाजलपूतवृत्तम् ।
लिखामि किञ्चच्चलितं मनो मे गुरुर्दयां वर्षतु मय्यबुद्धौ ॥४२॥

उसी परम सन्त को भक्तिभाव के साथ नमस्कार करके, उसका गंगाजल के संमान पवित्र वृत्त लिखने जा रहा हूँ। मेरा मन चञ्चल है, अतः श्री गुरुदेव मुझ अज्ञ पर दया की वर्षा करें।

गुणैर्गरीयः क्व गुरोश्चरित्रं लघीयसीयं क्व च शेमुषी मे ।
अन्नाचलं वोढुमुदीतबुद्धे–राखोरिवात्रास्ति मम प्रवृत्तिः ॥४३॥

कहाँ तो गुणों से बोझिल गुरु का यह चरित्र और कहाँ मेरी यह लघीयसी बुद्धि ? इस महान् कार्य में मेरी यह प्रवृत्ति अन्न के पहाड़ को उठाने के लिये उत्सुक चूहे के समान है।

तथापि सन्तो मम वाचमेनां श्रुत्वा भविष्यन्ति ननु प्रसन्नाः ।
गुणान् गुरूणां हि गिरा गृणन्तो बालाः सतां प्रीतिकरा भवन्ति ॥४४॥

इतने पर भी सत्पुरुष निश्चित ही मेरी वाणी को सुनकर प्रसन्न होंगे क्योंकि गुरुजनों के गुणों का गान करने वाले बालक सज्जनों को प्रिय लगा करते हैं।

सोऽहं नानकदेवमादिमगुरुं विज्ञानविद्याम्बुधिम्
संसारार्णव-पारतारणतरिं स्तुत्वा नृरूपं हरिम् ।
वाणीं तद्गुणजाह्नवीपयसि सुस्नातां विधातुं निजां
श्री मन्नानकदेवचारुचरितं काव्यं करोम्यादरात् ॥४५॥

वही अज्ञ मैं, संसार सागर को पार करने की नौका, नृ-रूप श्री हरि विज्ञान- विद्याम्बुधि, आदिम गुरु श्री नानकदेव की स्तुति करके, उसके गुण रूपी गंगाजल में, अपनी वाणी को स्नान कराने के लिये, श्री मंन्नानकदेव के सुन्दर चरित सम्बन्धी काव्य को सादर लिखने जा रहा हूँ ।

इति कविवरश्रीविष्णुदत्तशर्मविरचिते श्रीगुरुनानकदेवचरिते
महाकाव्ये प्रथमः सर्गः ।



## अथ द्वितीयः सर्गः

परिस्थितिं तां परिशीलयामि स्वभारतस्याद्य यदावतारः ।
बभूव ते नानक ! दुःखदैन्यं ज्ञानेन शीलेन विहन्तुमाशु ॥१॥

हे नानक ! आज मैं अपने भारतवर्ष की उन्हीं परिस्थितियों का पुनः परिशीलन कर रहा हूं। जिसमें ज्ञान एवं शील के द्वारा दुःख और दीनता का शीघ्र विनाश करने के लिये तुम्हारा अवतार हुआ था।

व्याप्तः समष्टौ निखिलेऽत्र देशे घोरस्तदासीत् कलहो विवादः ।
परस्परं क्षुद्रजनाः स्वकीयं निरीक्ष्य युद्ध्यन्ति सुकुत्सितार्थम् ॥२॥

उस समय, इस सम्पूर्ण देश में, मानव समाज भयंकर कलह एवं विवाद से युक्त था। क्षुद्रजन कुत्सित प्रयोजनों के लिये स्वार्थवश परस्पर लड़ा करते थे।

भूपा न रक्षन्ति सुनीतिपूर्वं प्रजाः स्वकीयाः स्म विवेकशून्याः ।
धनं प्रजानां निजभोगहेतोर्जघन्यरीत्या स्म हरन्ति कामम् ॥३॥

विवेक-हीन राजा नीतिपूर्वक अपनी प्रजा की रक्षा नहीं करते थे। निजी उपभोग के लिये, निन्दित ढंग से प्रजा का धन, स्वेच्छापूर्वक छीना करते थे।

यो रक्षकः पूर्वमभूत्प्रजानां स भक्षकोऽभूदधुना नरेन्द्रः ।
धनानि धान्यानि च हर्त्तुमासां मिथ्यापराधान् परिकल्प्य नित्यम् ॥४॥

पूर्वकाल में जो राजा प्रजा के रक्षक थे, इस समय वही राजा, प्रजा के भक्षक वन चुके थे और आधुनिक राजा नित्य मिथ्या अपराधों की कल्पना करके, प्रजा के धनधान्य का अपहरण किया करते हैं।

न तादृशः कोऽपि बभूव राजा, यः सर्वथा विस्मृतवान् न धर्मम् ।
भोगेषु लिप्तोऽनुबभूव देहे भोगप्रसूतान् विविधान् स रोगान् ॥५॥

उस समय कोई भी वैसा राजा नहीं था। जिसने सर्वथा धर्म को न भुला दिया हो। भोगो में लिप्त हुए वे राजा शरीर में विविध प्रकार के रोगों का अनुभव किया करते थे।

स एव राजा खलु राजते यः प्रजा निजा धर्मधियानुरक्षन् ।
इतीव विस्मृत्य धनं प्रजाभ्यो यथातथाऽऽप्याददते स्म भूपाः ॥६॥

राजा कहलाने का वही अधिकारी है, जो अपनी प्रजा की रक्षा, धर्मबुद्धि से करता हुआ सुशोभित होता है। इस प्रकार जो मानो धन को भूलकर, प्रजा के लिए ही धन संग्रह करता है, वही राजा है।

प्रजा महद्दुःखदशाभिशप्ता विस्मार्य देशोन्नतिपूर्णभावम् ।
रीत्या कयाचिद्भरणव्यवस्थां स्वीयक्षुधायाः स्म चरन्ति मन्दम् ॥७॥

घनघोर दुःखदशा से अभिभूत प्रजा देशोन्नति के विचार को भुलाकर येन-केन प्रकारेण अपनी उदरपूर्त्ति की व्यवस्था करती थी।

राजा यथा, सन्ति तथा प्रजाश्चेत्यतो जहुर्धर्मधियं मनुष्याः ।
पापेषु रक्ता विषयेषु सक्ता भक्ता बभूवुर्नगराङ्गनानाम् ॥८॥

जैसा राजा होता है, वैसी ही प्रजा होती है। अतः मनुष्यों ने धार्मिक भावना को त्याग दिया था और वे पापों में अनुरक्ति, विषयों में आसक्ति तथा वेश्याओं में भक्ति रखने लगे थे।

यथा तथा स्वोदरपूर्त्तिरेव प्रायेण कर्मैकमभूज्जनानाम् ।
धनस्य लाभः खलु येन सम्यक् बभूव लोकस्य स एव धर्मः ॥९॥

मनुष्यों का प्रायः यथातथा स्वोदरपूर्त्ति मात्र ही कर्त्तव्य रह गया था। जिस प्रकार भी सम्यग्रूपेण धन का लाभ हो वही (उस समय) लोक का धर्म बन चुका था।

उद्घोषितासीदृषिभिः कदाचिद् विवेक-भामण्डित-वेदवाणी ।
यज्ञीयधूमैश्च नभःप्रदेशो व्याप्तः सदाऽभूच्च विशुद्धवातः ॥१०॥

जहाँ कभी ऋषियों के द्वारा ज्ञान-प्रदा वेदवाणी उद्घोषित थी और आकाश मण्डल सुरभित यज्ञ धूम से सुवासित वायु से परिव्याप्त था ।

खेदाय वेदा अभवन्निदानीमभूत् कृपाणीव च वेदवाणी ।
यज्ञोऽप्यभूदज्ञजनस्य कार्यं निर्बुद्धि चाज्याहुतिशुद्धिरासीत् ॥११॥

वहां वेद इस समय खेद के हेतु बनकर रह गये थे और वेदवाणी कृपाण तुल्य हो गई थी । यज्ञ अब अज्ञ जन का कार्य माना जाने लगा । घृत की आहुति से होने वाली वाली शुद्धि अब निर्बुद्धि का विषय बन गई थी ।

स्थाने च धर्मस्य बभावधर्मो दुष्कर्मतैवाद्य सुकर्मताऽभूत् ।
व्रीडा न पीडासु च दुर्बलस्य क्रौर्यं न चौर्यं जनतासु जातम् ॥१२॥

धर्म का स्थान अधर्म ने ले लिया था । दुष्कर्म ही आज सुकर्म बन गये थे । दुर्बल की पीड़ा में किसी को व्रीड़ा नहीं होती थी । जनता में चौरकर्म को क्रूरकर्म नहीं माना जाता था ।

भक्ष्या बभूवुः किल नित्यरक्ष्या मान्या अमान्याः सहसा बभूवुः ।
वन्द्या जना एव च नित्यनिन्द्या आसन्नसन्तो भुवि सन्त एव ॥१३॥

नित्य रक्षण करने योग्य को ही नित्य भक्षण करने योग्य माना जाने लगा । मान्य ही सहसा अमान्य हो गये । वन्दनीय जन ही नित्य निन्दनीय बन गये । भूमण्डल पर सज्जनों को ही सर्वाधिक दुर्जन माना जाने लगा ।

नृणामभोज्यञ्च बभूव भोज्यं यच्चाप्यसेव्यञ्च तदेव सेव्यम् ।
अकार्यमेवाभवदत्र कार्यं यदेव हार्यं तदभूच्च धार्यम् ॥१४॥

मनुष्यों के अभोज्य पदार्थ भोज्य बन गए । असेवनीय वस्तु सेवनीय हो गई । अनुचित कर्म सुकर्म की गणना में आ पहुंचे और त्याज्य कार्य तब करणीयत्व को प्राप्त हो गये थे ।

सर्वत्र गन्धः पललस्य दिक्षु व्याप्तः पलाण्ड्वादिकभोजनानाम् ।
कोलाहलः शुष्क-विचारणायाः सुगुञ्जितः कष्टकरस्तदासीत् ॥१५॥

चारों दिशाओं में लहसुन प्याज एवं मांसादिक भोजन की कटु गन्ध फैल रही थी। तथा उस समय सर्वत्र कष्टप्रद शुष्क विचारों का कोलाहल गून्ज रहा था।

उत्पत्तिमन्नान्मनसः किलाहुर्यथा यदन्नं हि तथा मनोऽस्य ।
दुरन्नभोजी खलु दुर्मनाः स्यात् पूताशनः पूतमना मनुष्यः ॥१६॥

विद्वानों ने अन्न से मन की उत्पत्ति मानी है। अतः जैसा अन्न होगा वैसा ही व्यक्ति का मन होगा। दुष्ट अन्न के खाने वाले व्यक्ति का मन दुष्ट होता है और पवित्र पदार्थ के भोक्ता का मन पवित्र होता है।

नरा अभूवन्नतिकामिनोऽत्र कदन्नदोषेण च कामिनीषु ।
दिने दिने कामुकता प्रवृद्धा न लेशतोऽपि प्रशशाम तेषाम् ॥१७॥

कुत्सित अन्न के भोजन करने से, इस भूमण्डल पर मनुष्य कामिनियों के प्रति अतिकामी हो गये थे और उनकी कामुकता प्रतिदिन बढ़ रही थी, लेशमात्र भी शान्त नहीं हो रही थी।

नार्यः सदाचारयुताः सुशीला गृहस्थतारञ्जितपूर्णभावाः ।
स्वजीवितेशस्य विलोक्य घोरां सदा महाकामुकतां रुदन्ति ॥१८॥

सुशीला, सदाचारिणी, गृहस्थपालन में प्रसन्न, स्त्रियाँ, अपने पतियों की भयङ्कर अत्यधिक कामुकता को देखकर नित्य रुदन करतीं थीं।

अर्थोऽपि कामाय बभूव पुंसां धर्मोऽपि चार्थाय जनैः सिषेवे ।
मोक्षो नरस्यास्ति परो निजार्थ इति क्व जानाति जनः पृथिव्याम् ॥१९॥

अर्थ के लिये ही धर्म का सेवन किया जाने लगा। मोक्ष मनुष्य का परम पुरुषार्थ है, यह कौन जानता था ? अर्थात् कोई नहीं।

**यः शासकानां स समादृतोऽभूदनादृतोऽभूदितरस्य धर्मः ।**
**धर्मस्य तत्त्वं न विवेद कश्चिद् यष्टयैव धर्मस्य बभूव पुष्टिः ॥२०॥**

जो शासकों का धर्म था, वही समादृत था। अन्य व्यक्तियों के धर्म अनादृत थे। कोई भी व्यक्ति धर्म के तत्त्व को नहीं जानता था। धर्म की पुष्टि वल के द्वारा ही की जा रही थी।

**रामश्च कृष्णश्च शिवश्च गंगा गीता तथा वैदिक-तन्त्र-मन्त्राः ।**
**शान्तिं न यच्छन्ति तदाऽत्र लोके संसाधनानि प्रतिगामिवृत्तेः ॥२१॥**

राम, कृष्ण और शिव के नाम, गंगा, गीता तथा वैदिक मन्त्र और तन्त्र, उस समय केवल धनार्जन के साधन वन चुके थे, शान्ति प्रदायक नहीं।

**धर्मास्तदासन् बहवः प्रकीर्णा जनेषु ते किन्तु न शान्तिहेतोः ।**
**धर्मप्रियाणां मतवादिनां ते सन्दूषिता वै बहुभिर्विवादैः ॥२२॥**

यद्यपि उस समय अनेक धर्म प्रचलित थे फिर भी धर्म गुरुओं और मत-वादियों के विभिन्न विवादों से दूषित हो जाने के कारण, लोगों के लिये शान्ति के हेतु न वन सके।

**धर्मः स्वयं रक्षति रक्षितः सन्निति श्रुतिः साध्वभवत् प्रतीपा ।**
**यतो हि धर्मोऽद्य विवाद-हेतु र्भूत्वा प्रजाप्राणहरोऽजनिष्ट ॥२३॥**

'स्वयं सुरक्षित हुआ धर्म, रक्षा करता है।' यह श्रुति वाक्य उस समय पूर्ण रूपेण विपरीत हो गया था। क्योंकि आज धर्म विवाद का हेतु वनकर प्रजा के प्राणों का अपहर्त्ता वन गया था।

**बौद्धाश्च जैनाश्च सनातनाश्च शैवास्तथा वैष्णवधर्मशीलाः ।**
**गोरक्षपान्था न हि केवलं वै युद्ध्यन्ति पाश्चात्त्यविधर्मिणोऽपि ॥२४॥**

केवल बौद्ध, जैन, सनातन, शैव, वैष्णव गोरखपन्थी आदि ही नहीं, अपितु इस्लाम आदि विदेशी (शिया-सुन्नी) धार्मिक भी आपस में विवाद किया करते थे।

येषामहिंसा परमः स्वधर्मस्त एव हिंसाकरणेऽनुरक्ताः ।
सदैव धर्मं शरणं व्रजन्तः पदे पदे पापमुपाश्रयन्ते ॥२५॥

जिनका अहिंसा ही अपना धर्म है, वे लोग ही हिंसा करने में अनुरक्त थे । नित्य धर्म की शरण में जाते हुये भी अर्थात् 'धर्म शरणं गच्छामः' का जाप करने वाले भी पग पग पर पापों का आश्रय ले रहे थे ।

छायासु धर्मस्य तदा स्वदेशे वसन्ति सर्पाः स्म कुभावनायाः ।
सन्दंशितो यैः खलु जीवलोकः क्षणे क्षणे याति विवेकहानिम् ॥२६॥

उस समय अपने देश में धर्म की छाया में दुर्भावना के भीषण सर्प निवास कर रहे थे, जिनके द्वारा काटा गया (पीड़ित) जीवलोक विवेकहीन हो रहा था ।

स्त्रियश्च बालाश्च न कस्य रक्ष्याः कुलस्य लोकस्य च मूलमाद्यम् ।
तथापि जाताः खलु ताश्च ते च प्रायेण पापाचरणस्य लक्ष्यम् ॥२७॥

कुल और लोक के आदि मूल बालक और स्त्रियाँ किसके द्वारा रक्षणीय नहीं हैं ? अर्थात् सबके द्वारा रक्षणीय हैं । पुनरपि वे स्त्रियाँ और वे बालक प्रायः पापमय आचरण के लक्ष्य बन चुके थे ।।

नरैर्न नार्यः परिपीडनीया इति त्वतीते समये व्यतीतम् ।
यतोऽद्य जातः सकलार्यदेशः प्रायेण नारीनयनाश्रुसिक्तः ॥२८॥

मनुष्यों के द्वारा स्त्रियां नहीं सतायी जानी चाहियें । यह तो अतीत काल की बात हो गई थी क्योंकि आज तो सम्पूर्ण आर्य देश प्रायः कुलाङ्गनाओं के नेत्राश्रुप्रवाह से सिञ्चित हो चला था ।

नार्यः कुमार्यश्च बलाद् बलिष्ठै- र्दुष्टैः सदैवापहृता बभूवुः ।
न केवलं मार्गगता गृहेऽपि स्थिता दुराचारिभिरर्दितास्ताः ॥२९॥

स्त्रियां और कुमारियाँ बलपूर्वक दुष्ट बलिष्ठों (बलवानों) के द्वारा नित्य अपहृत हो रही थीं । न केवल राजमार्ग में विचरण करती हुई, अपितु घर में स्थित भी, कन्याएं और सुन्दरियाँ दुराचारियों के द्वारा पीड़ित की जा रही थी ।

पुरा स्वदेशे विचरन्ति नार्यो भयं विना सर्वजनस्य रक्ष्याः ।
तस्मिन् किलास्मिन् स्वगृहेऽपि पापैः कदर्थितास्ताः सभया वसन्ति ।। ३० ।।

प्राचीनकाल में, अपने देश में स्त्रियाँ निर्भय होकर विचरण किया करती थीं क्योंकि वे सभी जनों द्वारा रक्षणीय थीं । उसी, इस देश में (आज) वे अपने घर में भी पापियों द्वारा पीड़ित की जाती हैं, इस कारण भयभीत रहती हैं ।

विधर्मिणो यौवनलक्षणानि दृष्ट्वैव बाला अपजह्रुराशु ।
इत्यष्टवर्षैव सुता हिताभून् प्रत्यर्पिता बन्धुजनेन पत्ये ।। ३१ ।।

विधर्मी (यवन) यौवन लक्षणों को देखकर ही कन्याओं को तुरन्त अपहृत कर लेते थे । इस कारण आठ वर्ष की अवस्था में ही कन्याएँ बन्धुजनों के द्वारा पतिके लिए अर्पित की जाने लगी थीं । इसी में हित था ।

वैदेशिकैर्मुस्लिमबर्बरैर्नः स लुण्ठितो भारतवर्षदेशः ।
विलापमेव प्रकरोति कामं न वीक्ष्य कञ्चिन्नवशक्तिमन्तम् ।। ३२ ।।

विदेशी मुस्लिम लुटेरों द्वारा लूटा हुआ वह भारत देश किसी नवशक्ति-सम्पन्न उद्धारक को न देखकर फूट-फूट कर रो रहा था ।

धनैश्च धान्यैश्च सहैव शिक्षापथास्तथा धार्मिकपुस्तकानि ।
वैदेशिकैः पापपरायणैस्तैः समूलमुन्मूल्य विनाशितानि ।। ३३ ।।

धन, धान्य व शिक्षा पद्धति के साथ ही धार्मिक पुस्तकें भी पापरत उन विदेशियों के द्वारा मूल सहित उन्मूलन कर विनष्ट कर दी गईं ।

शिक्षां स्वधर्म्यामधिगन्तुमार्या नासन् स्वतन्त्राः क्वचिदत्र देशे ।
हठादिमान् पाठयितुं स्वविद्यां कुर्वन्ति बाध्यान् बहुशो विदेश्याः ।। ३४ ।।

इस देश में आर्यजन कहीं भी, अपनी धार्मिक शिक्षा को ग्रहण करने के लिये स्वतन्त्र नहीं थे । विदेशी (यवन) प्रायः अपनी शिक्षा को बलात् इन्हें पढ़वाने के लिये बाध्य करते थे ।

सहस्रशो धार्मिक-पुस्तकानि भ्राष्ट्राग्निसात्कृत्य विनाशितानि ।
सहस्रशश्चापि विपाट्य वारिण्युत्क्लेद्य पात्राणि विनिर्मितानि ॥३५॥

हजारों धार्मिक पुस्तकें भट्टी की आग में जलाकर नष्ट कर दी गईं। हजारों पुस्तकें फाड़कर जल में भिगोकर उनकी टोकरी आदि बनवादी गईं।

के चालया धार्मिकपुस्तकानामधर्मिभिर्वह्निमुखे न दत्ताः ।
अतस्तदत्यन्तविनाशभीतै-र्विप्रैः कृताः कण्ठगताः सुविद्याः ॥३६॥

अधार्मिकों द्वारा कितने धार्मिक पुस्तकालय अग्नि की ज्वाला में भस्मीभूत नहीं किये गये ? अर्थात् सभी भस्मीभूत कर दिये गये थे। इसलिए पुस्तकों के पूर्ण विनाश से आशङ्कित ब्राह्मणों द्वारा सद्विद्याओं को कण्ठस्थ कर लिया गया।

क्व मन्दिराणि प्रथितानि देशे पापात्मभिर्नैव विनाशितानि ।
हरे-र्हरस्य प्रतिमाः पवित्रा न खण्डिताः कुत्र नराधमैश्च ॥३७॥

इस देश में पापियों द्वारा कहाँ प्रसिद्ध मन्दिर नष्ट नहीं किये गये ? (अर्थात् सर्वत्र तोड़े गये)। और कहाँ नराधमों के द्वारा हरि और शिव की पवित्र प्रतिमाएं खण्डित नहीं की गईं (अर्थात् सर्वत्र देव प्रतिमाएँ तोड़ी गईं)

रामस्य कृष्णस्य च लोकभूत्यै दिव्यं वपुर्धारयतोः पृथिव्याम् ।
जन्मस्थलान्यप्यतिपावनानि भ्रष्टानि नष्टानि च दुष्टधीभिः ॥३८॥

पृथ्वी पर लोक-कल्याणार्थ अवतार धारण करने वाले राम और कृष्ण की पवित्र जन्म स्थलियाँ भी दुष्टों के द्वारा नष्ट भ्रष्ट कर दी गई थीं।

किं धर्मशास्त्राणि च मन्दिराणि प्रीतिर्दया वा करुणा च किं वा ।
रुदन्ति सर्वाणि हिमाद्रिविन्ध्यौ ज्ञानं विना सिन्धु-सरित्-सरांसि॥३९॥

क्या धर्मशास्त्र, क्या मन्दिर, क्या दया, क्या करुणा, क्या प्रीति, क्या हिमालय और विन्ध्याचल, क्या ही समुद्र, सरोवर और नदियाँ सबके सब ज्ञान के अभाव में विलाप कर रहे थे।

श्रद्धा च निष्ठा च विरक्तिभावो भक्तिश्च शक्तिश्च शिवस्वभावः ।
एकात्मकत्वं च विचारशक्ती रुदन्ति शीलञ्च सुबन्धुता च ॥४०॥

श्रद्धा, निष्ठा, वैराग्य, भक्ति, लोकमङ्गल, विश्व-एकता विश्व-बन्धुता विचार-शक्ति और सदाचार सबके सब रो रहे थे ।

दया जनानां हृदयादयासीत्, कृपाप्रपा निःसलिला बभूवुः ।
धर्मो न शर्मोपजगाम किञ्चित्, सत्ये सुकृत्ये च विवेश निद्रा ॥४१॥

दया मनुष्यों के हृदय से चली गई थी । कृपा की प्याउएँ बिना पानी की हो गई थीं । धर्म किञ्चित् भी सुख प्राप्त नहीं कर रहा था । सत्य और सुकृत्य के भीतर निद्रा प्रविष्ट हो गई थी ।

अधोगतिश्चोर्ध्वगुणेषु तस्थौ, तत्त्वञ्च निस्तत्त्वमभून्नितान्तम् ।
निन्द्यं समन्तादभिनन्द्यमासीत्, त्याज्यं सभाज्यं समभूज्जनानाम् ॥४२॥

अधोगति उच्चगुणों में स्थित हो गयी थी, तत्त्व (वास्तविकज्ञान) सर्वथा निस्तत्त्व (असार) हो गया था । चारों ओर निन्दनीय कर्म ही अभिनन्दनीय बन गया था । जो त्याज्य है, वही लोगों के लिए ग्राह्य हो गया था ।

शान्तिश्च कान्तिं विजहौ स्वकीयां, गतो विषादं परितः प्रसादः ।
धैर्यं धराया विलयं जगाम, चक्रन्द शून्ये च सदाऽन्तरीक्षम् ॥४३॥

शान्ति अपनी कान्ति को छोड़ चुकी थी । प्रसन्नता चारों ओर विषाद को प्राप्त हो रही थी । धरा का धैर्य विलीन हो चुका था और अन्तरीक्ष सदा शून्य में क्रन्दन कर रहा था ।

श्रुत्वा क्रन्दनमित्थमत्र सततं दीनार्तिहारी हरिः,
कर्त्तुं भारतभूमिमार्तिरहितां कारुण्यसिन्धुः स्वयम् ।
अंशेनावततार नानकगुरुर्भूत्वा भुवः श्रेयसे,
यस्मिँस्तत् खलु भारतं भवतु मे वाग्वैभवायानिशम् ॥४४॥

यहाँ इस प्रकार का सतत क्रन्दन सुनकर दीनों की पीड़ा को हरने वाले, करुणा सागर हरि स्वयं जिस भारतभूमि को दुःख रहित करने के लिये, तथा लोक कल्याण के लिए अपने अंश से ही गुरुनानक के रूप में अवतरित हुए । वह भारत अहर्निश मेरे वाग्वैभव के लिए हो ।

इति कविवरश्रीविष्णुदत्तशर्मविरचिते श्रीगुरुनानकदेवचरिते
महाकाव्ये द्वितीयः सर्गः ।



# अथ तृतीयः सर्गः

स्वभारतस्यैव शुभप्रदेशो नाम्ना च पञ्जाब इति प्रसिद्धः।
वहन्ति नद्यः किल पञ्च यस्मिन् सदैव सुस्वच्छसुधाम्बुपूर्णाः ॥१॥

अपने ही भारतवर्ष का एक शुभ प्रदेश 'पञ्जाब' नाम से प्रसिद्ध है। जहाँ नित्य सुविमल अमृततुल्य जल से प्रपूर्ण पञ्च (५) नदियाँ बहती रहती हैं।

जयत्यसौ यत्र पुरा प्रदेशे श्रीपाणिनि-व्याकरण-प्रणेता।
बभूव गान्धार-नृपात्मजा च पतिव्रता कौरवमान्यमाता ॥२॥

उस प्रदेश की जय हो, जहाँ किसी समय व्याकरण प्रणेता श्री पाणिनिमुनि और परम पतिव्रता कौरवों की पूज्य माता गान्धारी उत्पन्न हुईं।

अत्रैव राजा द्रुपदः पुराभूत् यदात्मजा पाण्डवयोषिदासीत्।
या द्रौपदीति प्रथिता बभूव ख्याता पतीन् पञ्च गतापि कन्या ॥३॥

पहले, यहीं राजा द्रुपद हुए। जिनकी पुत्री पाण्डवों की पत्नी बनी। जो 'द्रौपदी' इस नाम से विख्यात हुई। वह पञ्च पतियों (५ पाण्डवों) की पत्नी होने पर भी कन्या संज्ञा को प्राप्त हुई।

पाञ्चालिनामैव बभूव यस्याः प्रियं स्वदेशाभिधया नितान्तम्।
प्रियोऽधिकोऽस्या अत एव भीमः पाञ्चालिसम्बोधनकृद् बभूव ॥४॥

अपने देश के नाम से निन्तान्त प्रेम होने के कारण जिसका नाम ही पाञ्चाली हो गया था। इसलिए उसे यह भीम अधिक प्रिय था, क्योंकि भीम उसे पाञ्चाली कहकर पुकारता था।

अस्यैव देशस्य च रीतिनीतिः पाञ्चालिकेति प्रथिताभिधाना ।
काव्येषु काव्यज्ञजनैरुदारा निगद्यते सैव च कोमलेति ॥५॥

इस देश की रीति-नीति ही पाञ्चाली नाम से प्रसिद्ध हुई । काव्यों में काव्यज्ञों द्वारा वही पाञ्चाली रीति 'कोमला' इस नाम से पुकारी जाती है ।

आर्या इहैव प्रथमं न्यवात्सुः पञ्चाम्बु—पञ्चामृत-पुण्य-भूमौ ।
यस्या नदीः पञ्च पवित्रनाम्नीरद्यापि वेदाः सततं स्तुवन्ति ॥६॥

पञ्चाम्बु रूपी पञ्चामृत से पवित्र इस ही भूमि में, सर्वप्रथम आर्य लोग निवास किया करते थे । जिस प्रदेश की पाँचों पवित्र नदियों की आज भी वेद नित्य स्तुति किया करते हैं ।

अस्यैव देशस्य च मूर्धभागे पुरा धनुर्वेदविदग्निवेशः ।
प्रत्यर्पयामास किलायुधानि द्रोणाय शिष्याय मनःप्रियाय ॥७॥

प्राचीनकाल में इस ही देश के ऊपरी भाग में धनुर्वेदवित् अग्निवेश ने मनः प्रिय, शिष्य, द्रोण के लिए अपने आयुध अर्पित कर दिये थे ।

अत्रैव वीरः खलु पौरुषोऽभूत् स्वतन्त्रतायाः प्रहरी स आद्यः ।
यदाहता साऽलकजेन्द्रसेना नोल्लङ्घयामास पुरा विपाशाम् ॥८॥

यहीं स्वतन्त्रता का आदि प्रहरी, महान् योद्धा 'पौरुष' पैदा हुआ था । जिसके द्वारा परास्त अलकजेन्द्र की सेना उस समय विपाशा को पार नहीं कर सकी थी ।

तत्रैव विज्ञानविशाल-राशिर्यत्रान्ववर्षत् प्रतिभाम्बुदेभ्यः ।
श्री रामचन्द्रस्य कुलं पवित्रं वेदीति नाम्ना प्रथितं बभूव ॥९॥

जिस पञ्जाब प्रदेश में विज्ञान की विशाल राशि की वृष्टि प्रतिभारूपी मेघों से हुई थी । वहीं श्री रामचन्द्र का पवित्र कुल 'वेदी' इस नाम से प्रसिद्ध हुआ ।

वेदीत्यभिख्यां प्रति हेतुरासीत् कुलस्य वेदाध्ययनं किलास्य ।
वेदो हि यस्यास्ति तदेव वेदीत्येतत् स्फुटं व्याकरणेन सिद्धम् ॥१०॥

इस कुल का वेदाध्ययन ही 'वेदी' इस प्रसिद्धि के प्रति हेतु था । क्योंकि जिसके पास वेद है, वही वेदी होता है, यह बात व्याकरण के द्वारा स्पष्ट रूप से सिद्ध है। (वेदोऽस्यास्तीति वेदी)

वेदोऽखिलो मानवधर्ममूलं तेनैव सिक्तः खलु धर्मवृक्षः ।
अर्थञ्च कामञ्च, तथा च मोक्षं फलत्रयीं धर्मतरुः प्रसूते ॥११॥

समग्र वेद मानवधर्म के मूल हैं । धर्मरूपी वृक्ष वेदरूपी जल से ही सींचा हुआ है, और धर्मरूपी वृक्ष ही अर्थ, काम तथा मोक्ष रूपी तीन फलों को उत्पन्न करता है ।

श्रीरामचन्द्रस्य कुले पुमान्सः सर्वे पुरा वेदविदो बभूवुः ।
तेनैव सर्वोऽस्य कुलस्य बालः प्रगीयते जन्मत एव वेदी ॥१२॥

श्री रामचन्द्र के कुल में पूर्वकाल में सभी पुरुष वेदवेत्ता पैदा हुए । इसी कारण इनके कुल के सम्पूर्ण वालक जन्म से ही 'वेदी' कहलाते थे ।

भुवस्तलं मण्डयते समृद्ध्याऽखिलं कुलं तत् खलु वैदिकानाम् ।
तेनाऽस्य वंशस्य निवासभूतो ग्रामो बभौ भूतलमण्डि–नाम्ना ॥१३॥

वेदज्ञों का वह कुल समृद्धि के कारण अखिल भू-मण्डल को मण्डित कर रहा था । इस कारण इस वंश का निवास भूतग्राम 'भूतलमण्डि' नाम मे प्रसिद्ध हुआ ।(भूतलं मण्डयतीति भूतलमण्डि)

यं कालखण्डे बहुनि व्यतीते प्राहुर्मनुष्यास्तलमण्डिनाम्ना ।
सोऽयं मकारस्य वकार-भावाद् गतः कदाचित् 'तलवण्डि' भावम् ॥१४॥

अत्यधिक समय वीत जाने पर जिस ग्राम को मनुष्य 'तलमण्डि' नाम से पुकारने लगे । वही यह 'तलमण्डि' ग्राम के 'म' का 'व' हो जाने पर 'तलवण्डि' संज्ञा को प्राप्त हुआ ।

समुन्नतेऽस्मिँस्तल-वण्डि-नाम्नि ग्रामे प्रतिष्ठार्जित-पूतवंशे ।
बभूव वैदुष्यनिधिर्मनीषी सुपुण्यशाली बुधवेदिरायः ॥१५॥

इस समृद्ध तलवण्डि नामक ग्राम में, प्रतिष्ठा से अर्जित पवित्र कुल में पुण्यात्मा, वैदुष्यनिधि, एवं मनीषी विद्वान् वेदिराय पैदा हुए ।

स वेदिनां वेदविदां समाजे राजेव विद्याविभया रराज ।
अतो यथा नाम तथा गुणत्वात् तं वेदिराजं मनुजास्तदाहुः ॥१६॥

वह वेदिराय, वेदज्ञों के समाज में विद्या की कान्ति से राजा के समान सुशोभित हुए । अतएव "यथा नाम तथा गुणः" इस उक्ति के अनुसार मनुष्य उन्हें 'वेदिराज' कहते थे ।

सम्पद्यमानासु च यत्र तत्र, सर्वत्र वेदार्थविदां सभासु ।
अध्यास्य मुख्यासनमेव नित्यं स्ववेदिराजत्वमसौ पुपोष ॥१७॥

जहाँ तहाँ सब जगह वेदार्थ को जानने वालों की सभाओं के होने पर प्रधान पद पर स्थित होकर उन्होंने अपने वेदिराजत्व को सिद्ध कर दिया था ।

तस्यास्य विद्याविभवस्य दिक्षु प्रख्यातनाम्नो विदुषां वरस्य ।
अम्भोज-नारायण-नामकौ द्वौ पुत्रावभूतां पितृतुल्यभूती ॥१८॥

उस इस विद्या वैभव वाले दिशाओं में विख्यात कीर्ति वाले, विद्वानों में श्रेष्ठ वेदिराय के, पिता के तुल्य ही गुणशाली अम्भोज और नारायण नाम वाले दो पुत्र उत्पन्न हुए ।

नारायणस्याथ सुतो बभूव शिवेन तुल्यः शिवरामनामा ।
शिवानि कर्माणि वितीर्य लोके बभूव यो राम इव प्रसिद्धः ॥१९॥

उनमें से नारायण के शिवतुल्य शिवराम नामक पुत्र पैदा हुआ । जो कि संसार में लोकमङ्गल के कार्य करके राम के समान प्रसिद्ध हुआ । (शिवो राम इव शिवरामः)

कल्याणरायः पुनरस्य वंशे बभूव कल्याणकृदार्यभूमेः ।
तृप्तेति चासीद् गृहिणी सुशीला पतिव्रता यस्य हरेरिव श्रीः ॥२०॥

पुनः आर्यभूमि का कल्याण करने वाले इन शिवराम के वंश में कल्याण राय उत्पन्न हुए। जिनकी 'तृप्ता' नाम्नी गृहिणी, सुशीला, पतिव्रता विष्णु-पत्नी लक्ष्मी के तुल्य थी।

सानन्दमस्मिन् वसतः स्वगेहे कल्याणरायस्य युतस्य पत्न्या ।
अगात् पितृत्वं तनयेन नैव प्रपूर्णतां कन्यकया सतोऽस्य ॥२१॥

इसी अपने घर में आनन्द पूर्वक सपत्नीक निवास करते हुए कल्याण राय के पुत्र के कारण पितृत्व संज्ञा नहीं मिली अपितु कन्या के जन्म से ही तोपप्रद पितृ संज्ञा उपलब्ध हुई।

सा नानकी ख्यातमनोज्ञ-संज्ञा सुकन्यकावर्षदहो प्रमोदम् ।
पुत्रं विनैव प्रतनोति तोषं स्नेहं च कन्यापि हि पूर्वजाता ॥२२॥

वह सुकन्या 'नानकी' इस मनोज्ञ संज्ञा से विख्यात हुई परम आनन्द की वृष्टि करती थी क्योंकि प्रथम पैदा हुई कन्या भी पुत्र के अभाव में स्नेह और सन्तोष अधिक विस्तार ही किया करती है।

एवं तयोर्मोदवतोरनेके संवत्सरा यौवनसौरभाप्ता ।
व्ययं ययुर्धर्मनिमग्नभावा तृप्ता पुनर्गर्भमधत्त पुण्यैः ॥२३॥

इस प्रकार यौवन-रस का पान करते हुए प्रसन्न हुए उन दोनों दम्पत्तियों के अनेक संवत्सर व्यतीत हो गये। तब एक दिन धर्म भावना मे लीन हुई तृप्ता ने पुनः पुण्यों के प्रभाव से गर्भ धारण किया।

तं गर्भमाधाय तदा स्वकुक्षौ कल्याणरायस्य कलत्रभूता ।
तृप्तिं परां कामपि भावयन्ती तृप्ता स्फुटं सार्थवती बभूव ॥२४॥

उस समय कल्याणराय की पत्नी अपनी कुक्षि (कोख) में उस गर्भ को धारण करके किसी अपूर्व तृप्ति का अनुभव करती हुई, स्पष्ट रूप से 'तृप्ता' इस नाम की सार्थकता को प्राप्त हुई।

